तत्र संक्लेशप्रतिपक्षवस्त्वधिष्ठानं ग्राह्यविकल्पद्वयं प्र[19b]तिपादयन्नाह—**यो सौ नेत्यादि**। यः प्रतिभासपथप्राप्तोऽर्थोऽसावेकानेकस्वभाववैधुर्यादितोनुमानप्रमाणान्न विद्यते। स एवैष धर्मस्तत्त्वतो मायोपमतयाऽविद्यमान इत्युच्यते। न तु [शशविषाण]रूपतया तत्साधक-प्रमाणाभावात्। ननु प्रत्यक्षे प्रतिभातं वस्तु तत एव मायामयत्वान्नास्तीति शक्यतेऽवस्थाययितुं मायामयत्वस्यापि निर्विकल्पतया प्रत्यक्षेणाग्रहणात्। अथ विपर्यये बाधकप्रमाणबलात् मायामयत्वेन निश्चितस्यैव वस्तुनः सर्वाकारं प्रत्यक्षे प्रतिभासनमात्रादेव तेन मायामयत्वं गृहीतमिति व्यपदिश्यते। यद्येवं यत्तद्विपर्यये बाधकं प्रमाणं तत्किं प्रत्यक्षमथानुमानम्? यदि प्रत्यक्षं ग्रहणमात्रेण प्रमाणं सद्विपर्यये बाधकं [20a] स्यात्तदा तत्रापि समानत्वात् तुल्य एव पर्यनुयोग इत्यनवस्था। न च विपर्यये बाधकप्रमाणबलाद् घटादिप्रत्यक्षसिद्धमागोपानामिति। प्रतीतिरपि तु व्यवहारप्रवर्त्तकत्वापेक्षया सर्वाकारतत्त्वस्वरूपग्राहित्वे चेदानीं प्रत्यक्षस्य प्रामाण्यमुक्ताः स्युः सर्वदेहिन इत्यादिप्रसङ्गो दुनिर्वार्यस्तत्त्वेनेष्टा एवेति चेदेवं तर्हि कथं तत्त्वेनेष्टा इत्यादि प्रमाणप्रमेयव्यवहारः। यथाभिधानं संवृत्या भवतीति चेत्किमिदं यथाभिधानं विपर्यास इति चेत्। ननु सोऽपि तत्त्वेन स्वरूपनिमग्नज्ञानस्वभावतया सर्वाकारतत्त्व-स्वरूपग्राहीति कथं विपर्यासः तत्त्वेनैवंभूतोऽपि विपरीताध्यवसायलोकप्रतीतिबलाद्विपर्यास इति चेत्। कोऽयं लोको नाम कीदृशी च त[20b]स्य प्रतीतिः। येयमविचारैकरम्यत्वेना-पह्नोतुमशक्या संवृतिरिति चेत्। एवं तर्ह्यकामकेनापि यत्रैवांशे व्यवहारप्रवर्तनयोग्यं प्रत्यक्षं तत्रैवास्य संवृत्या प्रमाणतेत्यभ्युपगमान्न मायोपमत्वं प्रत्यक्षसिद्धमिति प्रत्येतव्यम्। अथ विपर्यये बाधकानुमानप्रमाणबलाद्वस्तुरूपग्रहणमात्रेणैव प्रत्यक्षसिद्धं मायोपमत्वं व्यवस्थाप्यते। न चैवं प्रत्यक्षसिद्धं लोके प्रतीतमिति प्राक्प्रतिपादितम्। तत्त्वतः सिद्धमिति चेन्नैवं प्रमाणप्रमेय-व्यवहारप्रवृत्तिः। किं तर्हि संवृत्यैवेति। अनन्तरमावेदितम्। ततो यथाध्यवसायानुरोधात्तु यथास्वं प्रमाणेन निश्चितव्याप्तिकादनुमानान्मायोपमत्वं भावानामद्यत्वे व्यवस्थाप्यत इति स्थित[म्,] अत एव**आर्यलङ्कावतारादौ** भगवता यथादर्शनसंवृ[21a]तिसत्यं यथान्यायं परमार्थसत्यमावेदितमिति अलं प्रसङ्गेन। एवं यथादर्शनं यो धर्मो विद्यते। यथान्यायं चाविद्यमानस्तं बालोऽनुत्पन्नार्यमार्गो जनो न्यायोपपन्नत्वेन कल्पयित्वा पुनरपि हेयतया संक्लेशवस्त्वधिष्ठानप्रथमग्राह्यविकल्पविषयन्ते(त्वे)नाविद्यां संक्लेशानुकूलां करोति स्थापयति। करोतेः(टेः) स्थापनार्थत्वात्, कुसूले धान्यङ्करोतीति यथा। तथोपादेयतया प्रतिपक्षवस्त्वधिष्ठानद्वितीयग्राह्यविकल्पविषयत्वेन विद्यां व्यवदानानुकूलां स्थापयति। एवं ग्राह्यविकल्पौ प्रतिपादितौ स्याताम्।

एतौ चेत एवारभ्याध्यवसितविषयसहितौ मायोपमत्वेनालीकौ भावनीयावित्याह—**विद्ये**त्यादि। इमे तत्त्वतोऽनुत्पन्नत्वेनासन्तो धर्मा रूपादयोऽभिमानबलाद्बालैरेते विद्याविद्ये द्वे कल्पिता(ते) इति। यो बोधिसत्त्वः श्रुतादिक्रमेण प्रजानाति स निर्याति विपर्यासबन्धनात् सम्यक्प्रवृत्तत्वेन निर्गच्छति॥ 13॥

ग्राह्यविकल्पद्वयानन्त[21b][रं] प्रथमग्राहकविकल्पार्थमाह—**मायोपमानि**त्यादि। यो बोधिसत्त्वः पञ्चस्कन्धान् रूपादीन् द्रव्यसत्पुरुषस्वभावान् ग्राहकविकल्पेनारोपितान् न्यायबलान्मायास्कन्धयोर्भ्रान्तिमात्रत्वे तुल्येऽपि लोकप्रतीत्यपेक्षयोपमितत्वान्मायोपमानिह निर्वेधभागीयकाले श्रुतादिज्ञानोदयेन जानात्येवं च प्रथमस्य द्रव्यसत्पुरुषाधिष्ठानग्राहकविकल्पस्य यत्स्वरूपं यथा च प्रहेयतया भावनीयं तत्प्रतिपादितं स्यात्। द्वितीयग्राहकविकल्पार्थमाह—**न च माये**त्यादि। यो बोधिसत्त्वो नैव मायां वितथप्रख्यातिरूपामन्यां न च स्कन्धानां हिताहंमानत्वेन प्रज्ञप्तिसत्पुरुषस्वभावाद् ग्राहकविकल्पेनारोपितानन्यां करोति। अपितु मायोपमानेव स्कन्धान् पूर्ववदिह जानातीत्युक्तं भवेदेवं च द्वितीयस्य प्रज्ञप्तिसत्पुरुषाधिष्ठानग्राहकविकल्पकस्य यत्स्वरूपं यथा च प्रहेयतया भावनीयं तत्प्रतिपादितं स्यात्।

एवं परिज्ञानको गुण इत्याह—**नानात्वे**त्यादि। यो बोधिसत्त्वोऽनन्तरोदितान् धर्माने[22a]वं जानाति स नानात्वसंज्ञया द्रव्यप्रज्ञप्तिसत्पुरुषसंज्ञयाऽधिमुक्तिमनस्कारबलाद्विगतो रहितस्तस्मान्निर्वाणानुकूलचर्यत्वादुपशान्तचारी भवति। यस्मादेशा(षा)धिमुक्तिः प्रज्ञापारमितायाः सकलजगन्नैरात्म्यरूपायाः क्रमेण प्राप्तिहेतुत्वाच्चर्यानुष्ठानमिति यावत्। चत्वारश्चामी विकल्पाः सन्निहितविनेयजनव्युत्पादनाय पूर्वं भगवत्यां विषयभेदात्प्रत्येकं नवप्रकारत्वेन गदितास्तस्मादत्र प्रधानसर्वार्थोपसंहारनिर्देशे प्रपञ्चकथनान्न किञ्चिद्विषयभेदाद्भेदश्चातन्त्रमिति ज्ञापयता भगवतैव **शतसाहस्रिकायामि**ह निर्वेधभागीयाधिकारे विषयभेदादन्यथा विकल्पानां भेदो मूर्धाभिसमये दृग्भावनामार्गाधिकारे चान्यथा प्रपञ्चः कृतः। सारं पुनरिह परस्परपरिहारस्थितलक्षणतया चाख्य(ख्या)न्तराभावेन यथोक्तौ ग्राह्यविकल्पौ ग्राहकविकल्पौ च द्वावित्येतदनुसारेणोत्तरत्राप्येवं प्रतिपत्तव्यम्॥ 14॥

इदानीं कल्याणमित्रोपायकौशल्यस्वभा[22b]वः सम्परिग्रहो वक्तव्यो यद्बलाद्यथोक्तवैशिष्टमित्याह—**कल्याणे**त्यादि। सत्यद्वयानतिक्रमेण धर्मदेशकः पुद्गलः सुगतिपाला-(फला)दिप्रापकत्वात् कल्याणमित्रं तेन सहितो युक्तोऽतएव श्रुतादिज्ञानोदयाद्विपश्यको युक्त्यागमाभ्यां धर्मस्य परीक्षको यस्तस्य त्रासो नास्त्यहं न भविष्यामि। न मेस्ति न

भविष्यामीति भयं न भविष्यति। जिनानां भगवतां जननात्मातरमिमां ग्रन्थात्मिकां प्रज्ञापारमितां श्रुत्वा प्रतिपद्येति यावदेवं स निर्वेधभागीयादौ सम्यक्प्रवर्त्तत इति भावः।

अन्वयमुखेनैव निर्दिश्य व्यतिरेकमुखेनापि स्पष्टयन्नाह—**यो पापे**त्यादि। यस्तु यथोक्त-सन्मित्रविपर्ययादकल्याणमित्रेण युक्तोऽत एव संस्काराभावात्परप्रणेयोऽन्यायत्तवृत्तिः स महायानाद्भिन्नो गम्भीरधर्मानधिमोक्षेणोत्त्रासात् भग्नो भवत्युदकस्पृष्टापरिपक्वघटादिवदिति। यथायं संपरिग्रहः प्रतिपादितः स्यात्॥ 15॥

ऊष्मादिकानन्तरमिदानीं प्रतिपत्तिमतो यथोक्तनिर्वेध[23a]भागीयमन्यदपि दर्शन-मार्गादिकमिति प्रतिपत्तेराधारं धर्मधातुस्वभावं बोधिसत्त्वं वक्तुमाह—**किं कारणमि**त्यादि। यदि धर्मधातोरेवार्यधर्माधिगमाय हेतुत्वात्तदात्मको बोधिसत्त्वः प्रकृतिस्थमनुत्तरबुद्धधर्माणां गोत्रं धर्मतासंज्ञकं तदा धर्मधातोः सामान्यवर्त्तित्वात् किं कारणमयमुत्पादितबोधिचित्त एव बोधिसत्त्वो बुद्धधर्माणां प्रकर्षेण प्रतिष्ठार्थोऽभिधीयते। यस्मात्सर्वत्र रूपादौ सङ्गक्रियो-ऽभिनिवेशेन कृतश[त?]वृत्तिरपि श्रुतादिबलेन विपर्यासमात्रमेव संसार इत्यवगम्य सङ्गच्छेदी। सर्वाभिनिवेशच्छेदनशीलो जातः सन् बोधिं तथागतीमिच्छति। तस्मात्संवृत्या सर्वावरण-प्रहाणाय प्रवृत्तत्वेन धर्मधातुस्वभाव एव बोधिसत्त्वोऽखिलबुद्धधर्माणामाधारः स्यादेवं च कृत्वोच्यते—असंस्कृतप्रभाविताः सर्वार्यपुद्गला इति। ननु चादावेव गोत्रं वक्तव्यं तत्पूर्वकत्वा-च्चित्तोत्पादादीनामिति कथमेवमुक्तम्। सत्यमर्थानुपूर्वेषाम्। इयं तु प्रतिपादना[23b]नुपूर्वी यत्कार्यं प्रतिपाद्य पश्चात्कारणं निर्दिश्यत इति। यथोक्तबोधिसत्त्वं किमालम्बनमिति। अतोनन्तरमालम्बनार्थमाह—**स्पृशिष्यती**त्यादि। यस्मात्सर्वधर्माणामेवालम्बनस्थानीयानामुभय-सत्यानतिक्रमादालम्बनेन याऽश(स)क्तता। तस्यां च सत्यालम्बनविशुद्धिगमनेन सवासना-खिलावरणप्रहाणोद्देशवतां सम्बन्धिनीमसद्भू(सङ्गभू)तामसङ्गस्वभावां बोधिमित्यत्राप्यभि-सम्बन्धादविपरीताधिगतिमनुत्तरां प्रक्ष्यति अधिगमिष्यति। तस्माद्बोधौ स्वार्थसम्पत्प्रयोजनेन सत्त्वं चित्तमस्येति कृत्वा बोधिसत्त्व इत्यन्वर्थसंज्ञकत्वेनायं सम्यक्प्रतिपन्नो जनः साधुशोभनं नाम लभ्य(भ)त इत्यालम्बनं गदितं स्यात्। ये तु धर्मधातुमेव सदा विशुद्धमद्वयं ज्ञानमालम्बनं मन्यन्ते, तैः सदा विशुद्धत्वादुत्तरोत्तरशुद्धिविशेषगमनं कथमिति वक्तव्यम्। ''अब्धातुकनका-काशशुद्धिवच्छुद्धिरिष्यत'' (म० वि० 1.17) इति चेत्। एवं तर्हि यथा श्रुतचिन्तामयेन ज्ञानेन निश्चितं [24a] वस्तुस्वरूपं तथा भावनीयमतो यथावस्थितवस्तुतत्त्वसाक्षात्करणाभिनिवेशेन प्रवृत्तत्वात् प्रकृष्टापि भावना न तदभिनिवेशवासनाबीजं निराकरोति। स्तिति(मि)तान्तरात्मनः

क्रमेण सर्वविकल्पोपसंहार इति चेदेवं तर्हि बाह्यार्थनयेनापि श्रावकादीनां विकल्पावरण-प्रहाणं स्यात्। न चैतदभ्युपगतमतः सर्वविकल्पवासनाबीजप्रहाणाभावात्प्रादेशिकशुद्धिप्रसङ्गः। त्वत्पक्षे कथमिति चेददोषः, यतो यावत्कश्चन भावो येन केन चिद्रूपेण परिकल्पितः सर्वे-(र्वो ऽ)सौ न्यायानुयायी भावो नास्तीति। अभावोऽर्थक्रियाकारी पदार्थो यथादर्शनं तथ्यसंवृति-रुच्यते। श्रुतादिज्ञानोदयात्तस्याश्च प्रच्छादिततत्त्वरूपायाः क्रमेण सर्वानभिनिवेशभावनाबला-द्यथावन्मायोपमत्वप्रतीतिरेव शुद्धिः। एवं च कृत्वा प्रकृतिप्रधानं गोत्रं वि[24b] कृतिप्रधान-मालम्बनमुभयं तूभयत्राप्रतिसि(षि)द्धमित्याधारालम्बनयोर्भेदोऽवसेयो बहुवक्तव्यं चेदमा-लम्बनमित्यलं प्रसङ्गेन॥ 16॥

किं फलमभिसमीक्षै(क्ष्ये)वं बोधिसत्त्वस्यालम्बनमित्यतोऽन्तरमुद्देशार्थमाह—**महे**त्यादि। केन कारणेन बोधिसत्त्वः सन् महासत्त्व इत्युच्यते। यस्माद्बुद्धभूमौ चित्तमहत्त्व-मागम्य महतोऽप्रमाणस्य सत्त्वराशेरपरिमितसत्त्वसमूहस्य धर्मदेशनादिनाऽग्रताकारणादग्रोऽयं भविष्यति। तथा प्रहाणमहत्त्वं प्राप्य दृष्टिगतानात्मादिदृष्टिप्रकारान्महतोऽप्रमेयात्सत्त्वधातोः सत्त्वनिकायस्य तत्प्रहाणोपायाख्यानात्क्षेपो(च्छेदो)ऽपनेष्यत्येतच्च द्वयमधिगममहत्त्वं विना न भवतीति। नान्तरीयकतया तदप्याक्षिप्तमतस्त्रिविधफलप्राप्त्यभिप्रायेण सत्त्वार्थप्रवृत्तत्वान्-महासत्त्व इत्युच्यत इत्युद्देशः प्रतिपादितः। आलम्बनादुद्देशस्य को विशेष इति चेत् [25a] शरसन्धानलक्ष्यवेधसाधर्म्येण तादात्विकमालम्बनं समीपवर्ति आमुत्रिकविप्रकृष्टस्तूद्देश इत्यनयोर्विशेषः। उद्देशानन्तरमिदानीं तन्निष्पत्तये प्रतिपत्तिर्वक्तव्या। सा च त्रिसर्वज्ञताविषये सामान्येन शुक्लधर्माधिष्ठाना। सर्वाकाराभिसम्बोधादौ चतुर्विधेऽभिसमयैर्प्रत्यभिसमयं षट्-पारमिताधिष्ठाना च क्रिया प्रतिपत्तिर्न धर्मकायाभिसमये फलत्वेन तत्र क्रियासद्भावात्। तत्र सन्नाहप्रतिपत्तिः सम्भारभूमिसङ्गृहीता। प्रस्थानप्रतिपत्तिरधिमुक्तिचर्याभूमिप्रतिबद्धा। सम्भार-प्रतिपत्तिर्दयादानादिकं षट्कम्। शमथोऽथ विदर्शना युगनद्धश्च यो मार्ग उपाये यत्र कौशलं। ज्ञानं पुण्यं च मार्गं च धारणीत्येतत्पर्यन्तेनाधिमात्राग्रधर्मसङ्गृहीता प्रथममुदिताभूमिस्वभावा सम्भारप्रतिपत्तिर्दर्शनमार्गात्मिका। द्वितीयादिभूमिस्वरूपात्तु भावनामार्गस्वभावा। प्रति-पक्षात्मिका च सम्भारप्रतिपत्तिरुभयमार्ग[25b]गोचरा। निर्याणप्रतिपत्तिस्तु भावनामार्गः प्रकर्षाधिष्ठानेत्येवं यत्र भूमौ प्रथमतोऽभ्यासोऽधिगमो वा तदपेक्षया वेदितव्यम्। चतस्रश्चैताः प्रतिपत्तयः प्रभेदरूपेण सर्वाकारं योजयितुमशक्यत्वात्सामान्योक्त्यात्र निर्दिश्यते॥ 17॥

विशेषाणामप्येवं संग्रहादत एव मन्दमतीनामनुग्रहो भवत्यन्यथा शिक्षितुकामतया प्रभेदयोजनादसंगतमुक्तं स्यादेवमुत्तरत्रापि द्रष्टव्यमतो वीर्यरूपतया प्रथमसन्नाहप्रतिपत्तिं दर्शयितुं महासत्त्वव्यपदेशकारणत्वेनाह—**महदि**त्यादि। तत्र सर्वस्वपरित्यागाशयान्महादायको विपुल-बोधिसत्त्वसंवरशीलाद्यालम्बनान्महाबुद्धिः परापकारमर्षणादि क्षान्तियोगान्महाप्रभावः। सत्त्वार्थादिवीर्यबलान्महायानचित्तैकाग्रतालाभादुत्तमः। कर्मकृत्यक्रियानुपलम्भप्रज्ञासम्पत्त्या तथागतानां निर्वाणारूढत्वेन समाभिरूढो भवत्येवं कृतसन्नाहस्य विशेषगमनमिति प्रस्थान-प्रतिपत्तिं [26a] द्वितीयां वक्तुमाह—**महे**त्यादि। प्रस्थानप्रतिपत्तिबलेन ध्यानारूप्यादिलक्षणेन महता नमुचिं देवपुत्रमारसेनां दुष्टाशयत्वेन शठामभिभविष्यामीति मनोरथेन सन्नद्धः कृतप्रयत्नस्तेन च कारणेन महासत्त्व इत्युच्यते। कृतप्रस्थानस्यैवं सम्भूयते समुदागमभावेन महाबोधिरिति॥ 18॥

सम्भारप्रतिपत्तिं तृतीयां वक्तुमाह—**माये**त्यादि। यथा मायाकरो मुख्यतो निर्वाण-स्थानत्वाच्चतुर्महापथेऽभिनिर्माय पुनरस्यैव महतो जनकायस्य बहुप्रकाराः शिरसां कोटीश्छिनत्ति। स्वनिर्मितेषु वस्त्वभिनिवेशसंमोहविगमेन प्राणातिपातादिभयाभावान्न च तस्य त्रास इति सम्बन्धनीयम् एवं यथा मायाकारेण निर्मितघात्यास्तथा प्रतिपक्षमायाकारबोधिसत्त्वेन ते देवपुत्रादयो निर्मितोपमा घात्या। यस्मादयं बोधिसत्त्वो जगत्सर्वं कर्मक्लेशमायाकारनिर्मितं श्रुतादिज्ञानोदयात्प्रजानात्यत एवावद्यभयाभावान्न च तस्य [26b] त्रासो भवति॥ 19॥

ननु सर्वस्यैव निर्मितोपमत्वे कथं तत्त्वतो बन्धमोक्षाविति चेत् तत्त्वतो न कश्चित्तावित्याह—**रूपं चे**त्यादि। रूपं यावद्विज्ञानमविद्याबलाद्बन्धं नैव मुक्तिं विद्यासामर्थ्यान्न चेत्यनुवर्तनीयम्। कुतो यस्माद्रूपादयोऽसद्भूतत्वेनासन्तो भूताः केनचित्प्रकारेण सद्भूतत्व-साधकप्रमाणाभावात्। संवृत्या कथं चेत्याह—**एवं चे**त्यादि। एवं न्यायतो यः सर्वधर्माणां शून्यत्वे[ऽ]पि यथादर्शनं प्रतिक्षेप्तुमशक्यत्वेन सर्वो व्यवहार इत्यवगमान्न च लीनचित्तोऽपि तु बन्धमोक्षो [हे]योपादेयतया वीर्यचित्तः सद्धर्मतत्त्वप्रत्यवेक्षायां प्रवर्तते। स एव भावना-बलाद्यथाभूतधर्माधिगतिं बोधिमधिगच्छतीति। मोक्षोऽस्य विद्याबलाद् व्यवस्थाप्यते। अन्यस्य पुनर्यथोक्तक्रमविपर्ययेणाविद्यासामर्थ्याद्बन्धस्तस्मादेषोऽनन्तरोक्तः सन्नाहो दया[दा]नादिप्रति-पत्त्वा(त्त्या) वरपुद्गलेषु श्रावकादिषूत्तमानां जिनपुत्राणां सत्यद्वयसमाश्रितोऽसाधारणो-[27a]मार्गः॥ 20॥

यथोक्त एव च मार्गे महायानं कथमिति प्रश्नपूर्वकं महायानस्वरूपमावेदयन्नाह—**किं कारणमि**त्यादि। यत्र यस्मिन्सफले बोधिसत्त्वमार्गे दयादानादिसम्भारप्रतिपत्त्यारुह्याधि-

गमयोगेन स्थित्वा क्रमेण सर्वसत्त्वान्निर्वापयिष्यति। तदिदं यानं किङ्कारणम्? बोधिसत्त्वयानं महायानमुच्यते। यस्मादाकाशवदप्रमेयसत्त्वावकाशतुल्यमिदं यानं सर्वाकारगुणसंपत्त्या महाविमानवत्, महाविमानं सत्सुखं कायिकं शान्तं वेदितम्। सौख्यं चैतसिकं, सर्वोपद्रव-रहितत्वादनाश्र(स्र)वतया, क्षेममाभिमुख्येन प्राप्य यात्यथवा सुखसौख्यं क्षेममाभिमुख्येन प्राप्तानां भगवतां सम्बन्धिश्रेष्ठमप्रतिविशिष्टं तस्मात्सफलो बोधिसत्त्वमार्गो महायानमित्युच्यते। तच्चेयमपि दिगन्तराद्यवस्थाप्राप्तौ विशिष्टं कारणं महद्यानमिति॥ 21 ॥ [27b]

लोकप्रतीतिवन्महायानग्रहणे विपर्यास इति चेदाह—**न चे**त्यादि। महायानमारुह्य यो बोधिसत्त्वः पूर्वादिदिशोऽस्योपलक्षणत्वात्प्रथमादिभूम्यवस्थामपि गच्छति। स तत्त्वतो नैवोप-लभ्यते। कथं तर्हि निर्माणगमनव्यवहारोऽतिप्रतीत इति चेत् आह—**निर्वाणे**त्यादि। निर्वाणे यदुक्तं गमनं तत्रापि विपर्यासनिवृत्तिरूपत्वान्निर्वाणस्येति न्यायतो गते नोपलब्धिः। लोके च स्वरूपनिवृत्तिमात्र एव निर्वाणगमनव्यवहारः प्रसिद्ध इत्याह—**यथे**त्यादि। यथाग्निर्निर्वृतो निर्वाणाङ्ग इति व्यवहारो न च तस्याग्नेरुपरतकारितत्वेनातीतेऽसम्प्राप्तव्यापारत्वेनानागतेति यो भावो न वर्तमाने च काले गतिप्रचारो गमनन्विशेषः सम्भवति। प्रमाणव्याहतत्वादतस्तेन कारणेन स्वरूपविनिवृत्तिमा[28a]त्रेण लोके साग्नेय(ग्नेः) निर्वृतिनिर्वाणमुच्यते॥ 22 ॥

यद्येवं महायाने न तत्त्वतो विशेषगमनाभावात्कथं बोधिसत्त्वस्तत्रारुह्य सत्त्वान्निर्वा-पयतीति चेदाह—**पूर्वान्तत** इत्यादि। पूर्वान्ततः कारणसामर्थ्यादपरान्ततः कार्यजननात्प्रत्युत्पन्ने-ऽपि तत्स्वरूपनिश्चयाद्बोधिसत्त्वो नोपलभ्यते। यथा भूतार्थसाधकप्रमाणाभावादतश्च त्रिष्वप्यध्व-स्वेकानेकस्वभावदोषवैधुर्याच्छुद्धो भवत्येवं न्यायतो यः शुद्धः स लोकधर्मैरनभिसंस्क्रियमाण-त्वादनभिसंस्कृतोऽत एवानुनयादिप्रपञ्चविरहादप्रपञ्चः। संवृत्या सत्त्वान्निर्वापयितुमीदृशोऽन्यथा तात्त्विकविशेषगमनाभिनिवेशतया विपर्यासाप्रहाणान्न जगदर्थकारी स्यादेवमविपरीतत्वादेषैव सा प्रज्ञायाः करुणादिसम्भारप्रतिपत्तेः समस्तमहायानधर्मस्वभावाया वरपारमितायाश्चर्या प्रतिपत्तिः॥ 23 ॥

कृतसम्भारस्यैवं निर्याणमिति प्रतिपत्तिंश्चतुर्थीं कथयन्नाह—**यस्मिंश्चे**त्यादि। काणाद-परिक[28b]ल्पितनित्यकालप्रतिसे(षे)धेन भावसंनिवेश एवं कृतसङ्केतत्वात्समयसङ्केतिते यस्मिन्काले बोधिसत्त्वः सत्यद्वयावबोधेन विद्वानेवोद्देशादिनिर्याणप्रतिपत्त्या चरन्न तु (चरन्तु) तिष्ठद्धर्माणामनुत्पादं विचिन्त्य जगति महतीं सर्वसत्त्वविषयां करुणां जनयति। न च

स्वपरयोरभिनिवेशात्सत्त्वसंज्ञां विद्यमानतासंज्ञामुत्पादयति। तदा प्रज्ञोपायकौशल्यादेषैव सा प्रज्ञायाः सर्वथोद्देशादिनिर्याणप्रतिपत्तेर्वरपारमितायाश्चर्यानुष्ठानमिति यावत्॥ 24॥

सत्त्वोपलम्भे को दोष इति चेदाह—**सची**त्यादि। यदि स्वपरयोर्विद्यमानता संज्ञामुत्पादयति। तदा दुःखसंज्ञो(ज्ञामु)त्पादयति। दानादिषु दुष्करचर्यानुष्ठानाच्चरिष्यामि दुःखम्। जगतश्चार्थं करिष्यामीत्युपलम्भादेवं चात्मानं परांश्च परिकल्पयति स बोधिसत्त्वोऽतः स्वपरविभागात्परिग्रहद्वेषौ, अनयोः सम्प्रतिबद्धाः सर्वदोषाः प्रजायन्ते। तस्मान्न च एष प्रज्ञवरपारमिताय चर्येति [29a] गतार्थम्॥ 25॥

कथं तर्हि चरितव्यमिति चेदाह—**यथे**त्यादि। व्यस्तसम्बन्धादनुत्पादं च सत्यद्वये प्रत्येकमुभयं द्विरूपमविकल्पयन्न मनसि कुर्वाणो यदा सर्वेण सर्वं सर्वथा सर्वं दुःखेभ्योऽयमात्मा स्वसन्तानो मया मोचयितव्य इत्यात्मानं यथा प्रजानाति तथा सर्वसत्त्वानपि देवादीन् बुध्यते। परात्मपरिवर्तकत्वेन संवृत्यैकत्वावगमादेवं यथा सर्वसत्त्वान् समारोपिताकारविविक्तान्प्रजानाति तथा सर्वधर्मानपि चित्तोत्पादादीन् प्रतिपद्यते। शून्यतान्यायेनैकत्वावबोधात्तदा सत्यद्वये सम्यक्प्रवृत्तत्वादेषा सप्रज्ञवरपारमिताय चर्या भवति॥ 26॥

ततश्च गन्तव्यवस्तुषु गमनमित्युपसंहरन्नाह—**यावन्ते**त्यादि। यावन्ते(न्ति) लोके परिकीर्तिता निर्दिष्टा धर्माश्चित्तोत्पादादयोऽतिप्रतीतानामशब्द[29b]प्रतीतिवाचकत्वात्तेषां सर्वेषामुत्पादं समतिक्रमं च निरोधं परित्यज्याप्रतिष्ठितनिर्वाणत्वेनाप्रच्युतस्वरूपत्वादमृतं तिष्ठति। यज्ज्ञानमादर्शादिरूपं सर्वविपर्यासप्रहाणात्परमं प्रतिविशिष्टान्यधर्माभावाच्च नैव यतः परेणोद्ध्वं विद्यते ज्ञानान्तरमेतस्यैव ज्ञानस्यार्थाया[ग]माधिगमप्रयोजनाय प्रज्ञेयमुद्देशादिनिर्याणप्रतिपत्तिर्वरपारमितेत्येवं प्रसिद्ध्याऽवस्थाप्यते॥ 27॥

नामशब्दस्य प्रसिद्धिपर्यायत्वात्तत्र च प्रतिपत्तौ कथं वर्तितव्यमित्याह—**एवमि**त्यादि। व्यस्तसम्बन्धात्प्रकृत्या स्वभावेन तथतायाऽसता मायोपमत्वेनाविद्यमानान् धर्मान् भावनादिक्रमेण परिजानानः सने(न्ने)वमुद्देशादिनिर्देशाप्रतिपत्त्याचरन् यो न कांक्षति विमतिं न करोति। स बोधिसत्त्वोऽयमुपायप्रज्ञे संवृतिपर[30a]मार्थे विहरतीति ज्ञातव्यो निश्चेतव्यः सम्यक्प्रवृत्तत्वादतश्चैषैव सा प्रज्ञा या यथोक्तनिर्याणप्रतिपत्तेर्वरपारमितायाश्चर्या प्रवृत्तिरित्युक्ता सर्वाकारज्ञता तथोक्तम्—

**चित्तोत्पादोऽववादश्च निर्वेधाङ्गं चतुर्विधम् ।**
**आधारः प्रतिपत्तेश्च धर्मधातुस्वभावकः ॥**

**आलम्बनं समुद्देशः सन्नाहप्रस्थितिक्रिये ।**
**सम्भाराश्च सनिर्याणाः सर्वाकारज्ञता मुनेः** ॥ इति।

(अभिसमयालङ्कार 1.6-7)

अस्य ग्रन्थस्याभिर्गाथाभिरुपसंहारः कृत इति स्पष्टप्रतिपत्तये। **शतसाहस्त्रिकायाः** सर्वार्थोपसंहारात् तदनुरूपेण परिवर्तयोजनं न्यायप्राप्तमपि मन्दमतेरप्रतीतत्वान्न कृत एवं **पञ्चविंशतिसाहस्त्रिका**नुरोधेन किन्तु सुखावगतये सर्वजनप्रतीतत्वादार्या**ष्टसाहस्त्रिका**नुसारेणार्थस्यैकत्वप्रतिपादनाय वा परिवर्तभेदोपसंहारपरि[30b]वर्तेप्येकस्मिं कृत्वा(ता)ऽस्माभिरिति ॥ 28 ॥

**॥ रत्नगुणसञ्चयगाथायां सर्वाकारज्ञताचर्यापरिवर्तः प्रथमः ॥**

•

# शक्रपरिवर्तो द्वितीयः

सर्वाकारज्ञताधिगमो विना न मार्गज्ञतापरिज्ञानेनेति मार्गज्ञता वक्तव्या। तत्र तावदाधारादिकं वक्तुमाह—**रूपस्मी**त्यादि। रूपादावभिनिवेशयोगाद्यो न तिष्ठति। सर्वधर्मतायां स्थितो भवति। यदुत निहतमानसन्तानतयाध्यामीकृताधिगमाधारे समुत्पादितबोधिचित्ततया प्रतिनियतविषयो "**बुद्ध भविष्यति सर्वजगोऽयं नास्ति ह कश्चिदभाजनसत्त्व**" इति वचनात्। वीतरागेतरयोगिनापि बुद्धत्वप्राप्तये मार्गाकारज्ञता भावनीयेति व्याप्तौ। पुण्यज्ञानसम्भारपरिपूरणतया सर्वथा क्लेशाप्रहाणस्वभावे [31a-31b][1] प्रज्ञोपायकौशलबलेनापरिगृहीतसत्त्वपरिग्रहणादिके च कर्मणि कृतप्रवृत्तिर्भवतीति। पञ्चविधोऽर्थो नान्तरीयकतया धर्मताशब्देन समाक्षिप्तोऽत्र वेदितव्योऽन्यथा मार्गज्ञताधिगमानुपपत्तेरत एव तदधिगमोपायत्वादेषा सा पञ्चविधेऽर्थेऽवस्थितिः प्रज्ञावरपारमिताया मार्गज्ञतास्वभावायाश्चर्या भवति। सामर्थ्यादाधारादिकमभिधाय मार्गज्ञताधिकारे स्वमार्गोपायकौशलपारमितापर्यन्तगतिमासाद्य यानान्तरविनेयसत्त्वार्थं प्रत्यसाक्षात्करणेन सहेतुकमार्गोपदेशपरिजयकौशल्यात् सर्वमार्गा बोधिसत्त्वेन परिपूरयितव्या इति॥ 1॥

[32a] श्रावकमार्गार्थमाह—**नित्यमि**त्यादि। तत्रोदयव्ययधर्मित्वेनानित्यं सास्रवस्य प्रतिकूलत्वेन दुःखत्वम्। परेणात्मना शून्यत्वेन शून्यत्वम्। स्वयमनात्मत्वादनात्मत्वं नित्यत्वादयस्त्वेतद्विपर्ययेणेत्येवं हानो[पा]दानभेदेन प्राधान्याद्दुःखसत्त्वा(सत्या)कारोपादानम्। तथताऽतथेति। अनेन च प्रकारेण बलात्परिशिष्टसत्यत्रयस्य विपर्यासाविपर्यासतया विपक्षप्रतिपक्षकाराणां सङ्ग्रहः। कथं तत्र बोधिसत्त्वस्य परिजय इत्याह—**शून्यतायाम्**। इत्येषामनुपलम्भरूपतायां इदमुक्तं स्यान्नित्यत्वादिधर्मप्रतिपक्षेणानित्यत्वादिभिराकारैश्चतुःसत्यवस्त्वावलम्बने श्रावकाणामुत्पद्यमानं दृङ्मार्गं तद्दर्शनप्रहातव्यक्लेशप्रहाणकारिणं कियत्कालविभावनया ज्ञात्वा पश्चात्तन्मार्गपातपरिहाराय तेषामेवाकाराणामनुपलम्भरूपता मनसि करोति। एवं च शून्यतायां सत्यां सामान्येन कस्यचित्फलस्य प्राप्ते(प्राप्तये) न स्थितोऽत एव मृदुमध्यतीक्ष्णेन्द्रियैरनित्यत्वाद्याकारभावनाबलाद्यथाक्रमं बोधित्रयं प्राप्यत इति श्रावकया-[32b]ने निर्देशाद्विशेषेण श्रावकप्रत्येकतथागतभूमौ च स्थितो न भवति। सर्वथा श्रावकयाननिर्दिष्टक्रमस्यानुपादेयत्वात्तद्यानविनेयसत्त्वानुग्रहैनै(णै)व निरात्मिकत्वेन क्लेशावरणप्रहाणकारित्वाद्यदि परतन्त्रबोधिसत्त्वस्य परिजयाय प्रवृतिरिति॥ 2॥

---

1. पत्रस्य अपरभागे चित्रं वर्तते।

निर्वेधभागीयपरिज्ञानपूर्वकं चतुःसत्यपरिज्ञानमिति निर्वेधभागीयार्थमाह—**यथे**त्यादि। यथा नायको भगवाननिकेतचारी तथतादिकेऽसंस्कृते धातौ तत्त्वतो न स्थितस्तथा कामादिकेऽपि संस्कृते न स्था(स्थि)तोऽथ च तत्र यथादर्शनं स्थितो भवति। एवमेव यथोक्ताकारभावनया निर्वेधभागीयपरिज्ञाने स्थाने बोधिसत्त्वोऽस्थित एव स्थितो भवति। यस्मादिदं स्थानमस्थानमेव स्थानं तथागतेनोक्तम्। श्रावकमार्गानन्तरं प्रत्येकबु[33a]द्धानां मार्गाभिधाने न्यायप्राप्तेऽपि श्रावकेभ्यः कथं प्रतिविशिष्टास्ते येन तेषां मार्गभेद इत्याशंकावारणाय पूर्वश्रुताद्यभिसंस्कारेण स्वबोध्यधिगमात्परोपदेशवैयर्थ्यमेकं तथा ज्ञेयावरणैकदेशग्राह्यविकल्पावरणप्रहाणाच्छब्दोच्चारणं विना परार्थकरणेन द्वितीयं ज्ञानगाम्भीर्यं वैशिष्ट्यमन्यथा विशिष्टत्वाभावे मार्गभेदानुपपत्तेरिति सामर्थ्याक्षिप्तमवसेयमतो विशिष्टानां विशिष्ट एव मार्ग इति॥ 3॥

प्रत्येकबुद्धमार्गार्थमाह—**यो इच्छती**त्यादि। यथा कश्चिदम्भोधिमध्यपतितोऽतीरदर्शी पारमपारं वा गन्तुं न शक्नोति। उपायाप्रतिपत्तेस्तद्धेतयः (स्तद्वत् यः) संसारार्णवनिमग्नो जनो पुनरा(र्ना)गतत्वात्सुगतत्वात्सुगतः श्रावकः प्रत्येकबुद्धो धर्मराजो वा तथागतो[ऽहं भवे]यमि[33b]तीच्छत्यभिलषति स मार्गज्ञतामिमां सर्वमार्गविषयिणीं धर्मनिध्यानक्षान्तिमनागम्याबुद्ध्वा न शक्नोति। अभिमतमर्थप्राप्तुमन्यथाधिगमाभावादित्यर्थः। व्याप्त्यर्थप्रतिपादनेन प्रत्येकबुद्धमार्गाधिकारादिदमुक्तं स्यात्र केवलं ग्राह्यविकल्पस्यैव प्रहाणतः प्रत्येकबुद्धानां योऽसौ विशिष्टो मार्गस्तत्स्वभावा मार्गज्ञता किं तर्हि श्रावकादिमार्गस्वभावापीति। ''ग्राह्याभावे तद्(द)ग्रह'' इति वचनात्॥ 4॥

कीदृग्विधग्राहकविकल्पेन धर्माणां ग्रहीतारः प्रत्येकबुद्धाः प्रतिपत्तव्या इत्याह—**मायाय धर्मत य श्रोष्यति भाष्यमाणानि**ति। अयमभिप्रायो वस्तुधर्मो ह्येष यस्मात्स्वलक्षणात्मके वस्तुनि कारणे योग्ये तद्ग्राहकं निर्विकल्पकज्ञानं स्वलक्षणं कार्यमुत्पद्यते। तदभावात्तत्रेति ग्राहक[34a]विकल्पस्य पुनर्निरुध्यमानेन रूपादीनां ग्राहकेणाविकल्पकज्ञानेन स्वसन्ताने समाक्षिप्तवासनायाः प्रबोधेनोत्पादानां यन्नियमो ग्राह्यविकल्पे सत्येव समुदय इति। तस्माद्ये प्रत्येकबुद्धाः परैर्भाष्यमाणानस्योपलक्षणत्वादभाष्यमाणानपि रूपादीन् निर्विकल्पानुभवादुत्तरकालं ग्राहकविकल्पेनाध्यवसायाच्छ्रोष्यन्ति ग्रहीष्यन्ति। तथा ये श्रवन्तः शृण्वन्ति च। ते च सर्वे वितथप्रख्यातिरूपग्राहकविकल्पेन सङ्गतत्वाद्धर्माणां ग्रहीतारो मायाया इव धर्मता येषां ते मायाधर्मता वेदितव्याः। ततश्चामुना न्यायेन ग्राहकविकल्पाप्रहाणतोऽपि प्रत्येकबुद्धानां मार्गस्वरूपं कथितं स्यात्। केनचिदाकारेण मायाधर्मतावचनात् मायास्वभाव-

निराकारेणेव तात्त्विकं तेषामस्तित्वं प्रतिपादि[34b]तमिति चेदाह—**फलप्राप्ते**त्यादि। तत्र ये प्रथमफलस्थादयोऽष्टौ पुद्गलाः प्राप्तफलाः, यश्च वर्गचारी खड्गविषाणकल्पश्च प्रत्येकबुद्धः सम्भोगनिर्माणकायाभ्यां जगद्गुरुरपि यो द्वेधाः यच्च निर्माणं धर्मकायोऽधिगतो यथा प्रथमं स्वपरार्थयोगाद्विद्वत्पण्डितैरथवा विदुषां मध्येऽतिशयप्रज्ञासम्पदा विद्वत्पण्डितैः सम्यक्सम्बुद्धैः साक्षात्कृतः सर्वे तेऽनन्तरोक्ता योगिसंवृत्योपादेयाः प्रतिपक्षमायाहेतुकत्वेन मायाजनिता मायामयाः प्रतीत्यसमुत्पन्नत्वादि हेतुभ्यो निर्दिष्टाः प्रतिपादिता धर्मराजेनान्ये तु नितरामेवोक्ता(?) यदि नाम कस्यचित्प्रसिद्धेनार्थेनाप्रसिद्धार्थसाधनाय मायां तेनोपमानं कृतम्। तथापि न कश्चिद्दोष इति भावः॥ 5॥

कीदृग्विधास्तुपुद्गलाः प्रत्येकबुद्धयानभाज इत्याह—**चत्वारे**त्यादि। तत्र मध्ये [35a] प्रज्ञादृष्टिसमुपेतत्वेन संवृतिपरमार्थविभागपरिज्ञानात् सत्यकुशलो जिनपुत्रः प्रथमः, निर्वेधभागीयाधिगमेन प्रत्येकबोधौ नियतत्वादवैवर्तिको द्वितीयः। सर्वत्र पूजार्हत्वादर्हन् स एव दर्शनादिमार्गेण ग्राह्यविकल्पस्य रागादेश्च प्रहाणाद्यथाक्रमं विधूतमलक्लेशोऽत एव धर्मताप्रत्यक्षकारितत्वेन विचिकित्साभावात्प्रहीणकांक्षस्तृतीयः। कल्याणमित्रपरिगृहीतोऽयं चतुर्थः। इतीमे चत्वारः पुद्गला इह प्रत्येकबुद्धयाने तद्गोत्रत्वान्नोत्रासं कुर्वन्तीत्याधारोऽनेनोक्तः॥ 6॥

कथं प्रत्येकबुद्धमार्गे बोधिसत्त्वेनाभ्यासः करणीय इत्याह—**एवमि**त्यादि। श्रावकाकारभावनयैव प्रतीत्यसमुत्पादानुगतया सर्ववस्त्वालम्बने प्रत्येकबुद्धा[35b]नामुत्पाद्यमानं दृङ्मार्गं तद्वत् क्लेशप्रहाणकारिणं मध्यप्रज्ञाबलेनाधिकधर्मतत्त्वदर्शनाच्च यथोक्तवैशिष्ट्यद्वययुक्तं ज्ञेयावरणैकदेशग्राह्यविकल्परहितम्। कियत्कालविभावनया ज्ञात्वा पश्चात्तन्मार्गपातपरिहाराय सर्वधर्मशून्यतां मनसि करोति। एवमनुपलम्भभावनया चरन् प्रत्येकबुद्धयाने विद्वत्पण्डितो बोधिसत्त्वो नार्हत्त्वे प्रहाणसम्पदि शिक्षते, नापि प्रत्येकबुद्धभूमौ ज्ञानसम्पदि। यस्मात्सर्वज्ञतामनु बुद्धत्वं लक्षीकृत्य तदुपायं नैरात्म्याभ्यासाच्छिक्षति। बुद्धधर्मे बोधिसत्त्वमार्गे तस्माच्छिक्षायामशिक्षायां च प्रज्ञोपायकौशलपरिग्रहबलाद्यथासंख्यं यो न शिक्षते स एवैषोऽविपरीतप्रतिपत्त्या शिक्षक इत्यर्थः। निर्वेधभागीयपरिज्ञाने सति यथोक्तप्रत्येकबुद्धमार्गपरिज्ञानमिति॥ 7॥

निर्वेधभागी[36a]यार्थमाह—**न च रूपे**त्यादि। तत्र सा[मा]न्येन स्वभावाभिधायित्वाद्रूपमत्र पञ्चोपादानस्कन्धाः। वृद्धिरुपचयः। परिहाणिरु(र)पचयः परिग्रहः स्वीकारोऽधिगम इति यावत्। इदमुक्तं स्याद् यथोक्ताकारभावनया निर्वेधभागीयपरिज्ञाने शिक्षमाणः प्रवृत्तिं कुर्वाणो यो बोधिसत्त्वो नैव शिक्षतेऽनुपादेयानां पञ्चोपादानस्कन्धानां वृद्धिपरिहाणि-

परिग्रहाय न शिक्षते। विविधानामुपादेयधर्माणां स्मृत्युपस्थानादीनां वृद्धिपरिहाणिपरिग्रहायाऽतएव सर्वज्ञतां बुद्धभूमिं न परिगृह्णाति। चित्तेनापि न स्वीकरोति। तत्राप्यभिनिवेशस्य बद्धत्वादेव निर्याति। स इह शिक्षाभ्यासे रतानां भगवतां सर्वज्ञतायां क्रमेणेति विशेषः। परिशिष्टक्लेशप्रहाणाय पूर्वोक्तमार्गसम्मुखी[36b]कृतवस्तुनोऽभीक्षमालम्बनेन भावनामार्गस्य व्यवस्थाप्यमानत्वात्। दर्शनमार्गपरिज्ञानेनैव तस्य परिज्ञानं संपद्यते। अतो बोधिसत्त्वानां परिज्ञानाय दृङ्मार्गवच्छ्रावकादिसम्बन्धिपृथग्भावना य(प)थोक्त(क्ता) इति ज्ञेयम्॥ 8॥

किं भूतो जिनपुत्राणां दर्शनादिमार्गो यस्याधिगमसामर्थ्येन स्वमार्गवशितां प्राप्य तद्यानविनेयसत्त्वानुग्रहेण मार्गद्वये परिजय इति। अतोऽनन्तरमैहलौकिकादिगुणैरुपेतमनुशंसं दर्शनमार्गं प्रतिपादयन्नाह—**रूपमि**त्यादि। रूपं न प्रज्ञायां तथता[या]मस्त्येवं न रूपे न प्रज्ञा। विज्ञानादयोऽपि ये न चैते प्रज्ञायामेवं न तेषु प्रज्ञा। किं तर्ह्याकाशधातुं समताशून्यताऽस्य रूपादेरतो न्यायतोऽनुत्पन्नत्वात्सर्वधर्माणां नैवास्त्याधाराधेयादिलक्षणो भेदो विशेषो नाना रूपतेति यावत्। [37a] इदमुक्तं स्यात्। यावन्तोऽङ्ग(र्थ)समारोपस्तन्निरासे विनिश्चयास्तावन्त एव शब्दस्य तेन ते भिन्नगोचरा इति। भावनाबलेन दर्शनमार्गो लौकिकस्याग्रधर्मस्यानन्तरमनुपलम्भः समाधिः प्रज्ञा च ससम्प्रयोगा। द्वादशोत्तरक्लेशशतप्रहाणकारी समुत्पद्यत इति॥ 9॥

कथं तर्हि चतुर्णामार्यसत्यानां क्रमादाकारभेदेन भावनातिप्रतीत्येत्याह—**आरम्बणे**त्यादि। तत्र परिज्ञेयमात्रत्वेन दुःखसत्यमारम्बणं सर्वानर्थोदयहेतुत्वेन भावाभिनिवेशस्य प्रहातव्यत्वात्समुदयसत्यम्। सत्त्वं साक्षात्कर्तव्यत्वेन निरोधसत्यमाकाशधातुः। सकलगुणोदयत्वेन धर्मप्रविचयस्य भावयितव्यत्वान्मार्गसत्यं प्रज्ञा। **अनन्तपारे**ति। अन्तः पूर्वान्तोऽपरान्तश्च कारणं कार्यमिति यावत्। परिपूर्णा[37b]त्मभावत्वानन्त(दनन्तः)कालः पारः। मायोपमत्वान्न विद्यतेऽन्तः पारश्च। यस्यां प्रकृतौ स्वभावे सानन्तपारा कार्यकारणस्वरूपरहितेति यावत्। इदमुक्तं स्याद् विदितजगत्स्वरूपत्वेन लोकविदुषां तथागतानां यथादर्शनं यानि सत्यानि तेषां या प्रकृतिः सा यस्मान्न्यायतोऽनन्तपारा। तस्मात्प्रतीत्यसमुत्पादवादिपक्षे, नैरात्म्याकारेणैकेन सर्वधर्माः सामान्यतो(समानतो) भावनीया[:]। वस्तुवादिपक्षे तु श्रावकयानादौ सत्यानामनित्यत्वाद्याकारभेदेन भावना व्यवस्थापिता। नित्यत्वादिधर्मान्तरस्य समारोपसम्भवादतो न तेनास्य विरोध इति॥ 10॥

वस्तुवादिपक्ष एव कस्मान्नाश्रीयत इति चेदाह—**संज्ञे**त्यादि। लोके यन्नाम प्रतीतं रूपादि तद्यस्मान्नाममात्रमिदं संज्ञामात्रे प्रतिष्ठितम्। "अभिधानात्पृथग्भूतं नाभिधेयं प्रकल्प्यत"

इति वचनात्। [38a] नायकेन जगद्गुरुणा प्रज्ञप्तिमात्रमिति मात्रशब्दस्य प्रकारान्तरव्यवच्छेदित्वात्संज्ञामात्रं प्रकीर्तितम्। तस्मात् संज्ञां प्रज्ञप्तिप्रतीतिनैरात्म्याकारेण विभाव्य येऽत्र दर्शनमार्गप्रहातव्यवस्तुप्रहाणेनानन्तर्यमार्गबलात् प्रहाणसंपदः पारं व्रजन्ति। प्राप्तवस्तुप्राप्त्या च विमुक्तिमार्गसामर्थ्येन ज्ञानसम्पदः पारं विगतसंज्ञां प्राप्नुवन्ति। त एव हेयोपादेयतत्त्वसाक्षात्करणेन सा(पा)रप्राप्ताः सन्तोऽविपरीतप्रतिपत्त्या पारमितायामिहदर्शनमार्गस्थिता भवन्त्यतोऽन्यथा विपर्याससरूपत्वान्नाभ्युपगम इति भावः॥ 11॥

पारमार्थिकमेव भावानां सहेतुकं सत्त्वं न विपर्यास इति चेदाह—**सचि( ची )**त्यादि। सचेद् गङ्गावालुकासमानपि कल्पां स्थित्वा भावानां सत्त्वमिति विद्यमानतेति शब्दं परिकीर्तियति नायको[38b]ऽपि न केवलमन्योऽपि जनकायस्तथापि सत्त्वस्योत्पादो विद्यमानतायाः सम्भवो निर्हेतुकत्वादिरहितत्वेन प्रथमतो निर्दोषत्वादादिशुद्धः। कुतो हेतोर्भविष्यति। अपि तु तत्साधकप्रमाणाभावात्, न कुतश्चिदतो भावानां सत्त्वस्य विपर्यासरूपत्वादेषा सा या पूर्वमुक्ता प्रज्ञाया वरपारमिताया दर्शनमार्गात्मिकायाश्चर्या नैरात्म्याकारेणैकेनाविशेषात्सर्वधर्मामुखीकरणेनानुष्ठानं प्रतिपत्तिरिति यावत्। इत्थंभूत एव दर्शनमार्गो भावनीय इति॥ 12॥

तथागतत्वव्याकरणलाभकथनेनोपसंहरन्नाह—**एवमि**त्यादि। यदाहमस्यां वरपारमितायां यथोक्तमार्गस्वभावायां भवेयमधिगमलाभात्तादात्म्येन तदा व्याकृतोऽहं पूर्वं दीपङ्करेण भगवता। यथावत् सकलपदार्थावबोधेन बुद्धो भविष्यसि [39a] त्वमनागते काल इत्येवं हितसुखानुकूलवादित्वादप्रतिकूलभाणी जिनो भणितवान्सर्वाकारज्ञतायामुक्तस्यैव दर्शनादिमार्गस्य पूर्वोक्तहेतुना पृथङ्मार्गज्ञताया व्यवस्थाप्यमानत्वात्। तदुक्तमेव निर्वेधभागीयमस्य दर्शनमार्गस्य ग्राह्यमिति॥ 13॥

**॥ रत्नगुणसञ्चयव्याख्यायां शक्रपरिवर्तो द्वितीयः॥**



## ABSTRACTS OF ARTICLES

*Stotras* *1-4*

In the present issue, the first stotra namely, "Bhagavatstotra" is taken from the Vimalakīrtinirdeśasūtra (p. 16-27), published from Taisho University, Japan. The second stotra, namely, "Tathāgatasaṁstava" is from the Lalitavistara (23.41-45).

*भोट-भारती बौद्ध अध्ययन के लिए महत्त्वपूर्ण चीनी ग्रन्थों की विश्लेषणात्मक सूची* *5-28*

यह लेख भारतीय विद्वानों, विशेष रूप से भारत में रहने वाले भोट विद्वानों को दृष्टि में रख कर लिखा गया है, जो भोट-भारती बौद्धधर्म के अध्ययन के लिए चीनी भाषा में उपलब्ध महत्त्वपूर्ण स्रोतों का अध्ययन करना चाहते हैं। इस निबन्ध में लेखक के अपने अनुसन्धान कार्यों एवं भोट से चीनी अनुवाद योजना के अन्तर्गत संगृहीत सूचनाएं प्रस्तुत की गई हैं। यद्यपि यह प्रस्तुति साङ्गोपाङ्ग नहीं है क्योंकि भारत में रहते हुए इस निबन्ध को लिखते समय इस विषय पर अच्छी सामग्री से युक्त किसी पुस्तकालय का उपयोग लेखक नहीं कर पाया। अतः इस लेख में जो सूचनाएं दी गई हैं वे इन्टर-नेट में या केन्द्रीय उच्च तिब्बती शिक्षा संस्थान, सारनाथ, वाराणसी के शान्तरक्षित पुस्तकालय में उपलब्ध हैं, जिनका यथा-स्थान टिप्पणी में निर्देश किया गया है।

*A Concise Praise of the Qualities of Bhaṭṭāraka Tsongkhapa* *29-42*

The main topics of this eulogy are as follows: Acārya Tsongkhapa properly analyses the meaning of the discourses of the Tathāgata explained by means of the scriptures and logic; he acquires perfect skill in following the teachings of the Buddha without any impediment; he gives teaching of the Tripiṭaka, the Āgama and practices the three-fold training, the Adhigama with the view and the conduct being complimentary to each other; he explains properly the procedure of receiving the complete teaching through them; between Sūtra and Tantra, he teaches the Vajrayāna in particular; among the entire Tantra Class, he explains the meaning of the

Anuttaratantra; he explains in particular the illusory body between the two stages, it being an unequivocal treasure of eloquent sayings; All these topics have been dealt with in the present eulogy.

This eulogy has been mentioned in the biography of Tsongkhapa and is available in the works composed by that author, the text has however important variants. Having compared different versions, the text is criticallty edited here with foot-notes.

*Sources of Rare Texts* *43-63*

In the 46th issue of *Dhīḥ* under the above title, information about 64 important Ms. of Buddhist texts preserved in various libraries were given. The present issue brings forth information about 76 important *Tantric* texts.

*Sources of Rare Texts: Various Indices (Volumes 31 - 45)* *64-86*

The column entitled "Sources of Rare Texts" is regularly published in *Dhīḥ* with a view to providing information about important manuscripts preserved in various manuscripts libraries in India and abroad. Based on the information published in this column, the indices of the works and authors have so far been published in vols. 15 and 30. As a sequel to them, indices pertaining to the material published in vols. 30 to 45 of *Dhīḥ* are being published in the present issue, in order to facilitate the readers with necessary references.

The material published in vols. 1 to 36 has already been published in the form of a separate book in three parts, under the same title.

*A Brief Episode of Dharmaśrīmitra (Jñānaśrīmitra)* *87-96*

In the Svayambhūpurāṇa, we come across an interesting as well as an important episode related to Dharmaśrīmitra. The text of the Svayambhūpurāṇa had been edited by Haraprasada Śāstrī, The Asiatic Society of Bengal, Kolkata, 1932. The present issue includes a portion of

that episode. According to that episode, Dharmaśrīmitra, a Bhikṣu from the Vikramaśīla Mahāvihāra, finds himself unable to write a commentary on the twelve letters, such as *a, ā* etc. and proceeds to the country of Mahācīna in order to meet Mañjuśrī. Having lost his way, he somehow meets with Mañjuśrī in a very unusual manner. He receives there the initiation of Dharmadhātu from his Guru, returns to Vikramaśīla at the instance of his Guru and continues to delivers discourses. As promised before, Mañjuśrī reaches that place changing his appearance. As soon as he reaches the assembly in a fearful appearance, Dharmaśrīmitra turns a blind eye towards Mañjuśrī. As a consequence, he becomes blind. However, he gets a wisdom eye due to the favour of his Guru and becomes well known in the world by the name of "Jñānaśrīmitra".

*Treasure of Buddhist Literature* *97-106*

The present essay briefly discusses the sources of Buddhist manuscripts. In ancient times, the rich collections of manuscripts preserved in the libraries of the universities of Nālandā, Vikramaśīla, Takṣaśilā etc. were known in the world. It was transferred to other countries and regions such as China, Central Asia, Nepal, Tibet and so on. All these regions are now known as the sources of Buddhist literary treasure. There are a very few manuscripts obtained from these regions that are now being studied and published in the centres for Buddhist studies in various countries, including India. However, the importance of these manuscripts cannot be ignored. The essay describes in brief the migration of the Sanskrit Buddhist manuscripts from India and their present status.

*The Three-fold Faith: Steps of Teaching through the Six Profound Dharmas propounded by Naropa* *107-116*

A Hindi translation of the work mentioned in the title of this essay is being published in a series of essays in this journal. In the present issue, the essay includes the following topics under the section dealing with the

"Special Preliminary Yoga" of the "Extra-ordinary Path": method of visualization of Vajrasattva, meditation of Guruyoga, worship of Guruyoga, worship of Maṇḍala and basing on it, the visualization of the "Stage of Generation".



In the Prajñāpāramitā literature, the Ratnaguṇasañcayagāthā possesses its own characteristics as well as importance. The tradition considers it as the saying of the Buddha. According to Haribhadra, this work is composed in the language of the Central Province. There is a commentary on this text by Haribhadra, yet unpublished, a copy of a manuscript of which has become available to us. Having taken into consideration the importance of this work, it has been decided to make this text available to scholars for their study and research. It is being edited and reproduced serially in the issues of this journal. The present issue includes the first and the second Parivarta of that work.

•

# རྩོམ་གྱི་ངོ་སྤྲོད་མདོར་བསྡུས།

## བསྟོད་པ་ཁག་གཉིས། ༡-༨

དུས་རབ་འདོན་ཐེངས་འདིའི་ནང་བཀོད་པའི་བཅོམ་ལྡན་འདས་ཀྱི་བསྟོད་པ་ཁག་གཉིས་ལས་སྔ་མ་ནི། ཛ་ལྡན་ཏྲའི་ལོ་མཆོ་སློབ་ཁང་ནས་པར་བསྐྲུན་ཞུས་པའི་འཕགས་པ་དྲི་མ་མེད་པར་གྲགས་པས་བསྟན་པ་ཞེས་བྱ་བ་ཐེག་པ་ཆེན་པོའི་མདོ་ལས་ཟུར་བཏོན་ཞུས་པ་ཞིག་ཡིན།(སྡེ་དགེ་བཀའ་འགྱུར། ལེའུ་༡ ཤོག་གྲངས་ ༡༥༥བ༢ ནས་ ༡༥༦ན༥) དེ་བཞིན་དུ་སངས་ཀྱི་བསྟོད་པ་ཕྱི་མ་དེ་ནི་འཕགས་པ་རྒྱ་ཆེར་རོལ་པ་ཞེས་བྱ་བ་ཐེག་པ་ཆེན་པོའི་མདོ་ལས་ཟུར་འདོན་ཞུས་ཏེ་འདིར་བཀོད་པ་ཡིན།(སྡེ་དགེ་བཀའ་འགྱུར། ལེའུ་༢༣ ཤོག་གྲངས་༡༥༨བ༦ ནས་ ༡༥༩ན༢)

## རྒྱ་བོད་ནང་ཆོས་སློབ་གཉེར་ལ་ཉེར་མཁོ་ཆེ་བའི་རྒྱ་ནག་ནང་ཆོས་ཀྱི་གཞུང་རྣམས་ལ་དཔྱད་པའི་དཀར་ཆག ༩-༢༦

ཆེད་རྩོམ་འདི་རྒྱ་གར་གྱི་མཁས་པ་སྤྱི་དང་། ཡང་དགོས་རྒྱ་གར་ནང་གནས་པའི་བོད་ཀྱི་མཁས་དབང་རྣམས་ལ་དམིགས་ཏེ་བྲིས་པ་གང་ཞིག་རྒྱ་བོད་ནང་ཆོས་ཀྱི་སློབ་གཉེར་ལ་ཉེ་མཁོ་ཆེ་ཞིང་། རྒྱ་ནག་གི་སྐད་དུ་བཞུགས་པའི་གལ་ཆེའི་མདོ་སྡེ་རྣམས་ལ་གསན་བསམ་དོན་གཉེར་ཅན་རྣམས་ཀྱི་ཆེད་དུ་བྲིས་པ་ཞིག་ཡིན། ཆེད་རྩོམ་འདིའི་ནང་རང་ཉིད་ཀྱི་ཉམས་ཞིབ་བྱས་པ་རྣམས་དང་། བོད་སྐད་ནས་རྒྱ་ནག་གི་སྐད་དུ་ཕབ་བསྒྱུར་ཞུ་རྒྱུའི་ལས་འཆར་གྱི་ཆེད་མཁོ་སྒྲུབ་བྱས་པ་རྣམས་ཀྱི་གསལ་ཁ་འདིར་བཀོད་ཡོད། རྒྱ་གར་ནང་གནས་སྤྱོད་བྱེད་བཞིན་དུ་གོང་གསལ་ཆེད་རྩོམ་འདི་བྲིས་པ་ལ་ཉེ་བར་མཁོ་བའི་ཆ་རྐྱེན་གྱི་ཡན་ལག་ཡོངས་སུ་རྫོགས་པའི་དཔེ་མཛོད་ཁང་ཞིག་མེད་སྟབས། ཆེད་རྩོམ་འདི་དེ་ཙམ་གྱི་ཚད་ལྡན་ཚད་ལོངས་པ་ཞིག་འགྱུར་དཀའ། ཆེད་རྩོམ་འདིའི་ནང་གནས་ཚུལ་གང་བཀོད་པ་དེ་དག་ནྲ་རྒྱའི་ཐོག་གསལ་བ་ཁག་དང་། སྣར་ཐང་དབུས་བོད་ཀྱི་ཆོས་

མཐོའི་གཙུག་ལག་སློབ་གཉེར་ཁང་གི་ཞི་འཚོ་དཔེ་མཛོད་ཁང་ནས་ཐོབ་པའི་ཕྱག་དཔེ་ཁག་ལ་གཞི་རྟེན་བཅོལ་བ་རྣམས་ཀྱི་སྐོར་ཆེད་རྩོམ་འདིའི་འོག་མཆན་དུ་གསལ་ཁ་བཀོད་ཡོད།

## རྗེ་བཙུན་བློ་བཟང་གྲགས་པའི་དང་ཚུལ་ཅུང་ཟད་བརྗོད་པ། ༢༥ - ༥༢

བོད་གངས་ཅན་གྱི་མཁས་པ་གྲགས་ཅན་སྟག་ཚང་ལོ་ཙཱ་བ་ཤེས་རབ་རིན་ཆེན་གྱིས་མཛད་པའི་རྗེ་བཙུན་བློ་བཟང་གྲགས་པའི་དང་ཚུལ་ཅུང་ཟད་བརྗོད་པ་ཅེས་པའི་བསྟོད་པ་ཚིགས་བཅད་བཅུ་དྲུག་གི་བདག་ཉིད་ཅན་འདི་བསྟོད་པ་གཞན་ལས་ཁྱད་དུ་འཕགས་པ་ཞིག་སྟེ། དེ་ཡང་མཁས་པ་འདི་སྔོན་རྒྱ་གར་འཕགས་པའི་ཡུལ་གྱི་མཁས་པའི་ཁྱུ་མཆོག་དབང་ཕྱུག་ཆོས་ཀྱི་རྗེས་སུ་འབྲང་བ་མཁས་མཆོག་དཔལ་བོ་ཞབས་དང་ཕྱོགས་འདྲ་བའི་མཛད་སྤྱོད་ཅན་ཞིག་སྟེ། སྐུ་ཚེའི་སྟོད་ལ་གང་ལ་བསྟོད་པ་མཛད་ཡུལ་གྱི་མཁས་པ་འཇམ་མགོན་རྒྱལ་བ་གཉིས་པར་ཅུང་ཐུགས་མ་མཉེས་པའི་ཚུལ་དུ་དེའི་ལྟ་གྲུབ་དང་འབྲེལ་བའི་སྐོར་ལ་འགལ་བའི་ཁྱུར་ཆེན་བཅོ་བརྒྱད་དུ་གྲགས་པའི་དགག་པ་མཛད་པའི་སྐབས་བྱུང་ཡོད་ཀྱང་། སྐུ་ཚེའི་སྨད་ལ་རྗེའི་གསུང་རབ་རྣམས་ལ་ཐུགས་གཟིགས་བོར་གནས་པའི་བློ་ནས་ཐོས་བསམ་དང་དཔྱད་པ་ཞིབ་ཏུ་མཛད་པས། སྔར་གྱི་དགག་པ་མཛད་པ་རྣམས་མི་འཐད་པར་གཟིགས་ཤིང་། ཆོས་ཀྱི་རྗེས་སུ་འབྲང་བའི་དད་གུས་ཐུན་མོང་མ་ཡིན་པ་སྐྱེས་པའི་བློ་ནས་བཤགས་པ་ཕུལ་བ་དང་། རྗེས་འཛིན་གྱི་སྐབས་སྔོན་མཛད་པའི་བསྟོད་པ་འདི་བརྩམས་སོ། །

བསྟོད་པ་འདིའི་བརྗོད་དོན་གྱི་གཙོ་བོ་རྗེ་བདག་ཉིད་ཆེན་པོས་ལུང་རིགས་གཉིས་ཀའི་ལམ་ནས་རྒྱལ་བའི་བསྟན་པ་འཛིན་ཚུལ་དང་། བསྟན་པ་ཐམས་ཅད་འགལ་མེད་དུ་ཐུགས་ཉམས་བཞེས་མཛད་ཚུལ་དང་། ལྟ་སྤྱོད་འགལ་མེད་ཀྱི་ཐོག་ནས་བཤད་སྒྲུབ་གཉིས་ཀས་རྒྱལ་བའི་དམ་ཆོས་ཀུན་གསལ་བར་མཛད་ཚུལ་དང་། ཁྱད་པར་དུ་མདོ་སྔགས་གཉིས་ལས་སྔགས་དང་། རྒྱུད་སྡེ་མཐའ་དག་ལས་སྔགས་བླ་མེད་ཀྱི་དོན་དང་། རིམ་གཉིས་མཐའ་དག་ལས་སྒྱུ་ལུས་ཀྱི་གདམས་པ་

རིན་པོ་ཆེའི་སྙིང་ལ་སྙོན་མེད་པའི་ལེགས་བཤད་ཀྱི་གཏེར་ཆེན་པོ་ཡིན་པ་སོགས་ཀྱི་དོན་ལྡན་གྱི་བསྔགས་པ་རྒྱ་ཆེ་མཛད་ཡོད།

བསྡོད་པ་འདིའི་རྩ་གཞུང་ཉེ་ཆར་བོད་ནས་སླར་བའི་མེས་པོའི་ཤུལ་བཞག་ནང་བཞུགས་མཁས་པ་དེའི་གསུང་འབུམ་ནང་ཡོད་དང་། རྗེའི་རྣམ་ཐར་ཆེན་མོར་གསལ་བ་གཉིས་ལ་ཚིག་སྦྱོར་མ་འདྲ་བའི་ཁྱད་པར་ཅི་ཆེ་ཡོད་པ་རྣམས་འདིར་འདྲ་བསྡུར་བསྒྱུར་ཞིབ་ཀྱི་སྒོ་ནས་དག་ཞུས་མཆན་བཀོད་དང་འབྲེལ་ཧིན་སྐད་ཐོག་ཕབ་བསྒྱུར་དང་། མཛད་པ་པོའི་ངོ་སྤྲོད་དང་། གཞུང་གི་བརྗོད་བྱའི་སྙིང་དོན་བཅས་བཀོད་ནས་ཀློ་ཿདུས་དེབ་ནང་འདོན་སྤེལ་བགྱིས་པའོ། །

ཆོས་དཀོན་པའི་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེ། ༥༣ - ༦༣

འགོ་བརྗོད་འདིའི་འོག་ཀློཿདུས་དེབ་ཞེ་དྲུག་པཱའི་ནང་གལ་ཆེ་བའི་ལག་བྲིས་ཕྱག་དཔེ་དྲུག་ཙུ་རེ་བཞིའི་ངོ་སྤྲོད་བཀོད་ཟིན་ཅིང་། ད་ལན་གྱི་འདོན་ཐེངས་འདིར་དེ་ལས་གཞན་པའི་ཕྱག་དཔེ་ལག་བྲིས་བདུན་ཅུ་དོན་དྲུག་གི་གནས་ཚུལ་དང་གསལ་བཤད་ཁག་བཀོད་ཡོད།

ཆོས་དཀོན་པའི་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེའི་ཁ་སྐོང་སྣ་ཚོགས།
(ཀློཿདུས་དེབ་ ༣༠ ནས་ ༥༤) ༦༥ - ༨༦

ཉམས་ཞིབ་ཀྱི་དུས་དེབ་ཀློཿཞེས་པའི་ནང་ཆོས་དཀོན་པའི་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེ་ཞེས་པའི་འགོ་བརྗོད་འོག་ཕྱི་ནང་ཡུལ་གྲུ་དུ་མའི་དཔེ་མཛོད་ཁང་དུ་ཉར་ཚགས་ཞུས་པའི་གལ་ཆེའི་གསུང་རབ་ལག་བྲིས་རྣམས་ཀྱི་གནས་ཚུལ་བཀོད་ཀྱི་ཡོད་པ་ལྟར། དེ་སྔ་པར་དུ་བསྒྲུན་ཟིན་པའི་གསུང་རབ་ཁག་གི་ངོ་སྤྲོད་རྣམས་ཀློཿདུས་དེབ་བཅོ་ལྔ་པ་དང་སུམ་ཅུ་ཐམ་པའི་ནང་ཆོས་དཀོན་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེའི་ཁ་སྐོང་སྣ་ཚོགས་ཞེས་པའི་འགོ་བརྗོད་འོག་གཞུང་གི་མཚན་དང་གཞུང་མཛད་པ་པོ་སོ་སོའི་མཚན་རྣམས་ཀ་མད་རིམ་པ་བཞིན་བཀོད་ཡོད། རིམ་པ་དེ་དང་

འབྲེལ་ནས་ད་ལན་གྱི་འདོན་ཐེངས་འདིའི་ནང་ ཀླིཿདུས་དེབ་སུམ་ཅུ་པ་ནས་ཞེ་ལྔའི་བར་གསལ་བའི་ཆེས་དཀོན་པའི་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེའི་གནས་ཚུལ་རྣམས་ཉམས་ཞིབ་པ་རྣམས་ལ་བདེ་བླག་དང་རྙེད་ཐུབ་པའི་ཆེད་གོང་གསལ་གྱི་འགོ་བརྗོད་ཀྱི་འོག་བཀོད་ཡོད།

དུས་དེབ་སོ་དྲུག་པ་བར་གྱི་ཆེས་དཀོན་གསུང་རབ་ཁག་གི་གནས་ཚུལ་རྣམས་ཕྱོགས་བཏུས་ཀྱིས་ཆེས་དཀོན་པའི་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེ་ཞེས་པའི་མཚན་ཅན་གྱི་ཡོད་དེབ་ཁག་གསུམ་རིམ་པ་བཞིན་པར་བསྐྲུན་ཟིན་ཡོད།

## ཆོས་ཀྱི་དཔལ་བཤེས་གཉེན་གྱི་ངོ་སྤྲོད་མདོར་བསྡུས། LV - ༨༦

ལེགས་སྦྱར་གྱི་སྐད་ཐོག་ཡོད་པའི་རང་བྱུང་སྔོན་རབས་ཞེས་པ་ཏར་པྲ་སཱད་ཤཱསྟྲི་ཡིས་ཞུས་བསྒྲིགས་གནང་སྟེ་བེང་གཱ་ལ་མངའ་སྡེའི་རྒྱལ་ས་ཀོལ་ཀཏྟར་ཡོད་པའི་ཨེ་ཤི་ཡཱ་ཏེ་ཀ་སོ་སཱའི་ཏི་ནས་སྤྱི་ལོ་ ༡༠༣༢ ལོར་པར་བསྐྲུན་ཟིན་ཡོད། དེའི་ནང་ཆོས་ཀྱི་དཔལ་བཤེས་གཉེན་གྱི་སྐོར་ལ་ངོ་མཚར་ཆེ་ཞིང་གནད་ཆེ་བའི་ཆ་ཤས་དག་མཐོང་རྒྱུ་ཡོད་པ་དེ་འདོན་ཐེངས་འདིར་བཀོད་ཡོད། དེར་གསལ་བ་ལྟར་བྱས་ན་ཁྲི་ཀྲམ་ཤཱིལའི་དགེ་སློང་ཆོས་ཀྱི་དཔལ་བཤེས་གཉེན་ཉིད་ཀྱིས་ཨ་ལ་སོགས་པ་ཡིག་འབྲུ་བཅུ་གཉིས་ཀྱི་འགྲེལ་པ་མཛད་མ་ཐུབ་པར་ཐུགས་སྐྱོ་ནས་འཕགས་པ་འཇམ་དཔལ་ཞལ་མཐོང་ཐོབ་པའི་ཕྱིར་ཆེན་པོ་རྒྱ་ནག་གི་ཡུལ་དུ་ཕེབས་པའི་སྐབས་ཤིག་ལ། ལམ་གྱི་ཁ་ཕྱོགས་ནོར་བའི་རྐྱེན་གྱིས་བལ་ཡུལ་དུ་འགྱོར་ནས་ཆེས་ངོ་མཚར་ཆེ་བའི་ཚུལ་དུ་རྗེ་བཙུན་འཇམ་དཔལ་དང་དངོས་སུ་མཇལ། ཁོང་ལས་ཆོས་ཀྱི་དབྱིངས་ཀྱི་དབང་ཞུས། བླ་མའི་བཀའ་ལྟར་སླར་ཡང་ཁྲི་ཀྲམ་ཤཱིལར་ཕེབས་ནས་ཆོས་གསུངས་པའི་བྱ་བ་དབུ་འཛུགས་ཀྱིས་མཛད་པ་སྐྱོང་བཞིན་པའི་སྐབས་ཤིག་ན། འཕགས་པ་འཇམ་དཔལ་གྱིས་སྔར་དམ་བཅས་པ་ལྟར་སྐུའི་ཆ་ལུགས་བསྒྱུར་ཏེ་འཇིགས་སུ་རུང་བའི་རྣམ་པས་གནས་དེར་ཕེབས་པར་ཁོང་གིས་མཇལ་ཀྱང་མ་མཁྱེན་པའི་ཚུལ་མཛད་པ་ལ་བརྟེན་ཁོང་གི་སྐྱོན་ལོང་བར་འགྱུར། འོན་ཀྱང་བླ་མའི་དྲིན་གྱིས་ཁོང་ལ་ཡེ་ཤེས་ཀྱི་སྤྱན་ཐོབ་པས་ཡེ་ཤེས་དཔལ་བཤེས་གཉེན་ཞེས་འཇིག་རྟེན་ན་མཚན་ཡོངས་སུ་གྲགས་པ་བྱུང་ངོ་། །

༩༧ - ༡༠༦

## ནང་པའི་རྩོམ་རིག་གི་རྒྱུ་ཆ།

ཆེད་རྩོམ་འདིའི་ནང་ནང་པའི་རྩོམ་རིག་གི་རྒྱུ་ཆ་ཞེས་པའི་འགོ་བརྗོད་འོག་ལེགས་སྦྱར་ནང་པའི་རྩ་བའི་མ་དཔེ་ཁག་གི་འབྱུང་ཁུངས་ཀྱི་སྐོར་ལ་གསལ་བཤད་མདོར་བསྡུས་ཤིག་བྱས་ཡོད། ལོ་རྒྱུས་ཀྱི་རང་བཞིན་ལྡན་པའི་རྒྱུ་མཚན་མང་དག་ཞིག་ལ་བརྟེན་ནས་དེང་སང་རྒྱལ་ཁབ་འདིར་ནང་པའི་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེ་ཁག་ཧ་ཅང་དཀོན་པོ་ཡོད། གནའ་བོའི་དུས་སུ་ནཱ་ལནྡཱ་དང་། ཝི་ཀྲམ་ཤཱི་ལ་དང་། ཏཀྵ་ཤཱི་ལ་ལ་སོགས་པའི་མཐོ་རིམ་སློབ་གཉེར་ཁང་གི་དཔེ་མཛོད་ཁང་རྣམས་སུ་བཞུགས་པའི་ནང་པའི་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེ་ཁག་གི་རྒྱ་ཆེ་བའི་རྩོམ་རིག་གྲགས་ཅན་རྣམས་ཀྱི་སྐོར་འཛམ་གླིང་ཡོངས་ལ་ཧ་ཅང་གྲགས་ཆེ་བའི་ཚུལ་དུ་ཡོད་པ་དེ་དག་དུས་ཕྱིས་རྒྱ་ནག་དང་ཨེ་ཤི་ཡའི་ཡུལ་དབུས་དང་བལ་ཡུལ་དང་བོད་སོགས་ཡུལ་གཞན་དང་གཞན་རྣམས་སུ་འགྱུར་ཡོད། ཡུལ་དེ་དག་ནི་དེང་སང་ནང་པའི་རྩོམ་རིག་གི་རྒྱུ་ཆའི་འབྱུང་ཁུངས་གཙོ་བོ་ཡང་ཆགས་ཡོད། དེང་གི་ཆར་རྒྱ་གར་ལ་སོགས་པ་འཛམ་གླིང་གི་ཡུལ་གྲུ་སྣ་ཚོགས་སུ་ཡོད་པའི་ནང་པའི་གཙུག་ལག་སློབ་གཉེར་ཁང་རྣམས་སུ་རྒྱལ་ཁབ་དེ་དག་ལས་ཐོབ་པའི་རྩ་བའི་མ་དཔེ་ཁག་ལ་སློབ་གཉེར་དང་དེ་དག་གི་པར་བསྐྲུན་ཞུ་མཁན་བཅས་ཧ་ཅང་ཉུང་ངུ་ཡིན་རུང་། དེ་དག་གི་གལ་གནད་ལ་སྣང་ཚུང་དུ་བསྒྱུར་འཇོག་མི་འོས་པ་ཡིན། མདོར་ན་ལེགས་སྦྱར་ནང་པའི་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེ་རྣམས་རྒྱ་གར་ནས་ཕྱིའི་ཡུལ་གྲུ་ཁག་ཏུ་ཇི་ལྟར་འགྱུར་ཚུལ་དང་། དེ་དག་གི་གནས་སྟངས་ཀྱི་སྐོར་ལ་འདིར་གསལ་བཤད་མདོར་བསྡུས་ཤིག་བཀོད་ཡོད།

## ཟབ་ལམ་ན་རོའི་ཆོས་དྲུག་གི་སྒོ་ནས་འཁྲིད་པའི་རིམ་པ་ ཡིད་ཆེས་གསུམ་ལྡན།

༡༠༧ - ༡༡༦

རྗེ་ཙོང་ཁ་པ་ཆེན་པོས་མཛད་པའི་ཟབ་ལམ་ན་རོའི་ཆོས་དྲུག་གི་སྒོ་ནས་འཁྲིད་པའི་རིམ་པ་ཡིད་ཆེས་གསུམ་ལྡན་ཞེས་བྱ་བའི་གཞུང་འདི་ཧིན་སྐད་ཐོག་ཕབ་བསྒྱུར་ཞུས་དང་ཞུ་བཞིན་པའི་

ལས་སུ་བྱ་བའི་རིམ་པ་ལས། འདོན་ཐེངས་འདིར་ཐུན་མོང་མ་ཡིན་པ་བླ་མེད་ཀྱི་ཐེག་པའི་སྔོན་འགྲོའི་རིམ་པ་ལས། ཁྱད་པར་གྱི་སྔོན་འགྲོ་ལ་རྡོར་སེམས་ཀྱི་སྒོམ་བཟླས། བླ་མའི་རྣལ་འབྱོར་སྒོམ་པ། དཀྱིལ་འཁོར་གྱི་མཆོད་པ་བཅས་དང་། གཞན་ཡང་དེ་ལ་བརྟེན་པའི་ལམ་གྱི་སྒོམ་ཚུལ་གྱི་རིམ་པ་ལ་གཉིས་ཡོད་པ་ལས་བསྐྱེད་རིམ་གྱི་སྐོར་རྣམས་ཧིན་སྐད་ཐོག་ཕབ་བསྒྱུར་ཞུས་ནས་བཀོད་ཡོད།

## བཅོམ་ལྡན་འདས་ཡོན་ཏན་རིན་པོ་ཆེ་སྡུད་པའི་ཚིགས་སུ་བཅད་པའི་ དཀའ་འགྲེལ་ཞེས་བྱ་བ།

༡༡༧ - ༡༥༨

བཅོམ་ལྡན་འདས་ཡོན་ཏན་རིན་པོ་ཆེ་སྡུད་པའི་ཚིགས་སུ་བཅད་པ་འདི་ནི་ཤེར་ཕྱིན་གྱི་རྩོམ་རིག་གི་ཐོག་ཁྱད་ཆོས་དང་ཆེ་མཐོང་དམིགས་བསལ་ལྡན་པའི་གཞུང་ཞིག་ཡིན། སྲོལ་རྒྱུན་གྱི་བཤད་སྲོལ་ལྟར་བྱས་ན་གཞུང་འདི་སངས་རྒྱས་ཀྱི་གསུང་ཡིན་པར་བཞེད་དོ། །སློབ་དཔོན་སེང་གེ་བཟང་པོས་གཞུང་དེ་ཡུལ་དབུས་ཀྱི་སྐད་ཐོག་བརྩམས་པ་ཞིག་ཏུ་བཞེད་ཅིང་། གཞུང་དེའི་འགྲེལ་པ་སློབ་དཔོན་སེང་གེ་བཟང་པོས་མཛད་པའི་ལེགས་སྦྱར་གྱི་རྩ་བའི་མ་དཔེ་གཅིག་རྐྱང་སོན་བྱུང་བ་འདི་ད་བར་པར་བསྐྲུན་ཞུས་པ་བྱུང་མེད། དེས་ན་གཞུང་དེའི་གལ་གནད་ལ་དམིགས་ཏེ་མཁས་དབང་ཉམས་ཞིབ་པ་དང་ནང་ཆོས་ཀྱི་སློབ་གཉེར་ལ་གཅིག་ཏུ་བརྩོན་པའི་དོན་གཉེར་ཅན་རྣམས་ལ་ཕན་ཐོགས་རྒྱ་ཆེ་འབྱུང་ཆེད་གཞུང་འདི་ལ་ཞུ་སྒྲིག་རོབ་ཙམ་བྱས་ནས་དྷཱིཿདུས་དེབ་རྣམས་སུ་རིམ་པ་བཞིན་པར་བསྐྲུན་ཞུ་རྒྱུའི་འཆར་གཞི་ཡོད་པ་ལྟར་ད་ལན་འདོན་ཐེངས་འདིར་ལེའུ་དང་པོ་དང་གཉིས་པར་ཞུས་བསྒྲིགས་ཀྱིས་པར་བསྐྲུན་ཞུས་ཡོད།

•••